| बु: | ल. शु. | वृ. |
|---|---|---|
| | शुभकर्त्तरी योगः | |
| | | |

| मं. | ल. र. | श. |
|---|---|---|
| | पापकर्त्तरी | |
| | | |

यदि जन्म लग्न शुभ ग्रहसे युक्त हो तो शुभ योग और यदि पापग्रहसे युक्त हो तो अशुभ योग होता है। लग्नसे बारहवें और दूसरे दोनों स्थानोंमें पापग्रह हों तो पाप-कर्तरिक और सौम्य हों तो सौम्य-कर्तरिक योग होता है ॥ १२५ ॥

शुभ योगमें उत्पन्न हुआ नर, खूब बोलनेवाला ( वक्ता ) रूप, शील, सदाचार तथा गुणसे पूर्ण रहता है। और पाप योगमें उत्पन्न नर कामी, पापी तथा दूसरोंका पैसा खानेवाला होता है ॥ १२६ ॥

शुभ-कर्तरी योगमें उत्पन्न जातक तेजस्वी, धनी और अधिक बलवान् होता है तथा पाप-कर्तरिकमें उत्पन्न जातक पापी, भिक्षुक, और मलिन चित्त होता है ॥ १२७ ॥

### अथ पर्वतयोगः।

सौम्येषु केन्द्रगृहगेषु सपत्नरन्ध्रे शुद्धेऽथवा शुभयुते यदि पर्वतः स्यात् ॥
लग्नान्त्यपौ यदि परस्परकेन्द्रयातौ मित्रेक्षितौ भवति पर्वतनाम योगः ॥ १२८ ॥
भाग्यान्वितः पर्वतयोगजातो विद्याविनोदाभिरतः प्रदाता।
कामी परस्त्रीजनकेलिलोलस्तेजोयशस्वी पुरनायकः स्यात् ॥ १२९ ॥

इदानीं पर्वतयोगमाह—सौम्येष्विति। शुभग्रहाः केन्द्रगता भवेयुः, षष्ठाष्टमौ भावौ शुद्धौ ग्रहरहितौ, अथवा शुभग्रहयुतौ यदि भवेतां तदा पर्वतो योगः स्यात्। लग्नान्त्यपाविति। यदि लग्नेशद्वादशेशौ परस्परं केन्द्रयातौ भवेतामर्थात् एकस्यापेक्षयाऽन्यो हि केन्द्रवर्ती स्यादिति। तथाभूतौ द्वावपि मित्रग्रहदृष्टौ स्यातां तदा पर्वतो नाम योगः स्यादिति। तथा यवनः—

"लग्नास्तमेषूरणगाः प्रशस्ताः सर्वे ग्रहेन्द्रा इह चेदपापाः।
तं पर्वतं विद्धि बलाधिकानां महीपतीनां प्रसवाय योगम् ॥"

जातकादेशे च—"उदयास्तकर्महिबुके ग्रहयुक्ते रिःफनैधने शुद्धे।
यः कश्चिन्नभगतो योगोऽयं पर्वतो नाम" इति ॥

पर्वतयोगे जातस्य फलमाह—भाग्यान्वित इत्यनेन सरलार्थेन श्लोकेन ॥१२८–१२९॥

| र. | बु. | ० |
|---|---|---|
| शु. | पर्वत योगः । | वृ. |
| ० | चं. | ० |

| मं. | १ | १२ र. |
|---|---|---|
| | पर्वत योगः ॥ | |
| वृ. | | |

शुभग्रह केन्द्रमें हों, षष्ठ और अष्टमस्थान शुद्ध हों, वा शुभयुत हों तो "पर्वत" योग होता है। लग्नेश और व्ययेश यदि परस्पर केन्द्रमें प्राप्त हों मित्रसे दृष्ट हों तो "पर्वत" योग होता ॥ १२८ ॥

पर्वत योगमें उत्पन्न होनेवाला पुरुष भाग्ययुक्त, विद्याविनोदमें लीन, दाता, कामी, परस्त्रीसे रमण करनेमें चञ्चल, तेजस्वी, यशस्वी और ग्रामका प्रधान नायक होता है॥१२९॥

## अथ काहलयोगः ।

अन्योन्यकेन्द्रगृहगौ गुरुबन्धुनाथौ लग्नाधिपे बलयुते यदि काहलः स्यात् ।
कर्मेश्वरेण सहिते तु विलोकिते वा स्वोच्चस्वके सुखपतौ यदि तादृशः स्यात्॥१३०॥
ओजस्वी साहसी मूर्खश्चतुरङ्गबलैर्युतः ।
यत्किञ्चिद्ग्रामनाथस्तु जातः स्यात् काहले नरः ॥ १३१ ॥

इदानीं काहलयोगमाह—अन्योन्येति । गुरुबन्धुनाथौ = नवमेशचतुर्थेशौ, अन्योन्यकेन्द्रगृहगौ = परस्परं केन्द्रगतौ भवेतां, एकस्मादन्यः केन्द्रगत इत्यर्थः । लग्नाधिपे = लग्नेशे, यदि बलयुते = स्थानादिबलसहिते सति 'काहलः' योगः स्यात् । योगान्तरमाह—कर्मेश्वरेणेति । स्वोच्चे = आत्मीयोच्चराशौ, वा स्वके = आत्मगृहे विद्यमाने, सुखपतौ = चतुर्थभावेशे, कर्मेश्वरेण = दशमभावेशेन सहिते यदि वा विलोकिते सति तादृशः स्यादर्थात् 'काहलः' योगः स्यादिति । तथा च जातकादेशे—
"बन्धुधर्मगृहाधीशावन्योन्यं केन्द्रमाश्रितौ । लग्नाधीशे बलवति योगः काहलसंज्ञकः" इति ॥
काहलयोगफलमाह—ओजस्वीति सरलार्थेन श्लोकेन ॥ १३०-१३१ ॥

| २ | चं. १ ल. | |
|---|---|---|
| ४ | काहलः । | १० मं. |
| | बृ. . | ९ |

| २ ३ | १ ल. | १२ ११ |
|---|---|---|
| चं. ४ श. | काहलः ॥ | १० |
| ५ ६ | ७ | ९ ८ |

यदि नवमेश और चतुर्थेश परस्पर केन्द्र में हों और लग्नेश बलवान् हो तो 'काहल' योग होता है। सुखेश अपने उच्च, वा स्वकीय भवनमें हो, दशमेशसे युत वा दृष्ट हो तो "काहल" योग होता है ॥ १३० ॥

काहल योगमें जायमान बालक बलवान्, साहसी, मूर्ख, चतुरङ्गिणी सेनासे युक्त और कुछ ग्रामोंका स्वामी होता है ॥ १३१ ॥

## अथ मालिकायोगः ।

लग्नादिसप्तगृहगा यदि सप्त खेटा जातो महीपतिरनेकगजाश्वनाथः ।
वित्तादिगो निधिपतिः पितृभक्तियुक्तो धीरोऽग्ररूपगुणवान् नरचक्रवर्ती ॥१३२॥
जातो यदा विक्रममालिकायां भूपः स शूरो धनिकश्च रोगी ।
सुखादिकश्चेद् बहुदेशभाग्यभोगी महादानपरो महीपः ॥ १३३ ॥
पुत्राद्या यदि मालिका नरपतिर्यज्वाऽथवा कीर्तिमान् ।
जातः षष्ठगृहात् कश्चिद् धनसुखप्राप्तो दरिद्रो भवेत् ॥
कामादिग्रहमालिका यदि बहुस्त्रीवल्लभो भूपतिः ।

दीर्घायुर्धनवर्जितो नरवरस्त्रीनिर्जितश्चाष्टमात् ॥ १३४ ॥
धर्मादिग्रहमालिका गुणनिधिर्यज्वा तपस्वी विभुः ।
कर्माद्या यदि धर्मकर्मनिरतः सम्पूजितः सज्जनैः ॥
लाभाद्राजवराङ्गनामणिपतिः सर्वक्रियादक्षको ।
जातो रिःफगृहाद्बहुव्ययकरः सर्वत्र पूज्यो भवेत् ॥ १३५ ॥

इदानीं मालिकायोगमाह—लग्नादित्यादिश्लोकचतुष्टयेन । तत्र प्रत्येकभावतो मालिकायोग उक्तः । यथा सप्त ग्रहा यथासम्भवं लग्नादिमारभ्य सप्तमभावावधिः प्रतिभावमेकैकग्रहक्रमेण स्थिताः स्युस्तदा लग्नमालिका स्यात् । द्वितीयादिमारभ्याष्टमं यावत्तथैव स्थिताः सप्त ग्रहाः स्युस्तदा वित्तमालिका स्यादेवं प्रतिभावमालिका ज्ञेया । प्रत्येकमालिकायोगस्य फलं पृथक् पृथगुक्तं तत्स्पष्टार्थमेवेति ॥ १३२=१३५॥

मं.
बु.
लं.
सू.
२
वित्तमालिका
शु.
चं.
श.
बृ.

किसी भी भावसे ७ भावोंमें ७ ग्रह हों तो उस भाव सम्बन्धी मालिका योग होता है । जैसे लग्नादि सात गृहमें यदि सात ग्रह हों तो "लग्नमालिका" योग होता है । इस योग में जायमान नर राजा, अनेक हाथी-घोड़ोंका स्वामी होता है । धनादि सात भावोंमें हो तो धनवान्, पिताकी भक्तिमें युक्ति, धीर, सुरूप, गुणवान् और मनुष्योंमें चक्रवर्ती होता है ॥ १३२ ॥

यदि विक्रम मालिकामें उत्पन्न हो तो पराक्रमी राजा, धनी और रोगी होता है । यदि सुखादिमें सप्त ग्रह हों तो बहुत देशोंमें भाग्यवान् और बहुत बड़ा दान करनेवाला राजा होता है ॥ १३३ ॥

यदि पुत्रादि मालिकामें उत्पन्न हो तो यज्ञ करनेवाला राजा वा कीर्तिमान होता है । यदि षष्ठ गृहमें मालिका हो उसमें उत्पन्न मनुष्य हो तो कभी धन सुख प्राप्ति हो और कभी दरिद्र होता है । कमादि ( ७ भावादि ) मालिकामें उत्पन्न होनेवाला मनुष्य बहुत स्त्रियोंका स्वामी और राजा होता है । अष्टम भावकी मालिकामें उत्पन्न मनुष्य दीर्घायु, दरिद्र, नर-श्रेष्ठ और स्त्रीसे निर्जित होता है ॥ १३४ ॥

धर्मादि मालिकामें उत्पन्न होनेवाला मनुष्य गुणका निधान, यज्ञ करनेवाला, तपस्वी, और समर्थ होता है । कर्मादि मालिकामें जायमान मनुष्य धर्म-कर्ममें निरत और सज्जनोंसे अच्छी तरह पूजित होता है । लाभ मालिकामें उत्पन्न होनेवाला मनुष्य राज्य-स्त्री-मणिका स्वामी, सर्वक्रियामें दक्ष होता है । रिःफ मालिकामें जायमान मनुष्य बहुत खर्च करनेवाला और सर्वत्र पूज्य होता है ॥ १३५ ॥

### अथ चामरयोगः।

लग्नेश्वरे केन्द्रगते स्वतुङ्गे जीवेक्षिते चामरनाम योगः।
सौम्यद्वये लग्नगृहे कलत्रे नवास्पदे वा यदि चामरः स्यात् ॥ १३६ ॥
योगे जातश्चामरे राजपूज्यो विद्वान् वाग्मी पण्डितो वा महीपः।
सर्वज्ञः स्याद्वेदशास्त्राधिकारी जीवेल्लोके सप्ततिर्वत्सराणाम् ॥ १३७ ॥

इदानीं चारमयोगं तत्फलञ्चाह—लग्नेश्वर इत्यादिश्लोकयुगलेन। स्वतुङ्गे = स्वकीयोच्चराशिं गतवति, लग्नेश्वरे, केन्द्र-( १।४।७।१० एतदन्यतमभाव- ) गते तस्मिन्, जीवेक्षिते-गुरुणा दृष्टे चामरनाम योगः स्यात्। योगान्तरमाह—यदि लग्नगृहे, वा कलत्रे = सप्तमेभावे, वा नवमें, वा आस्पदे = दशमे भावे, सौम्यद्वये व्यवस्थिते चामरः योगः स्यात्। तत्फलं योग इत्यनेन स्पष्टार्थकेन श्लोकेनाह॥१३६-१३७॥

| | | |
|---|---|---|
| बृ. ।. | ॥. बु. शु. ल. १ | |
| | चामरयोगः | १० मं. ।. |
| | बु. शु. ॥. | बु. शु. ॥. |

लग्नका स्वामी अपनी उच्च राशिका होकर केन्द्रमें स्थित हो और गुरुसे दृष्ट हो तो "चामर" योग होता है। यदि लग्नमें, वा सप्तममें वा नवम, वा दशममें दो शुभग्रह हों तो "चामर योग होता है ॥ १३६ ॥

चामर योग में उत्पन्न होनेवाला मनुष्य राजपूज्य, विद्वान्, वक्ता, पण्डित, वा राजा, सर्वज्ञ, वेदशास्त्रका अधिकारी और ७० वर्षतक जीनेवाला होता है ॥ १३७ ॥

### अथ शङ्खयोगः।

अन्योन्यकेन्द्रगृहगौ सुतशत्रुनाथौ लग्नाधिपे बलयुते यदि शङ्खयोगः।
लग्नाधिपे च गगनाधिपतौ चरस्थे भाग्याधिपे बलयुते तु तथा वदन्ति १३८
शङ्खे जातो भोगशीलो दयालुः स्त्रीपुत्रार्थक्षेत्रवान् पुण्यकर्मा।
शास्त्रज्ञानाचारसाधुक्रियावान् जीवेल्लोके वत्सराणामशीतिः ॥ १३९ ॥

अधुना शङ्खयोगं तत्फलञ्चाह—अन्योन्येति। सुतशत्रुनाथौ = पञ्चमेशषष्ठेशौ, अन्योन्यकेन्द्रगृहगौ = परस्परं केन्द्रगतौ भवेतां, लग्नाधिपे = लग्नेशे यदि बलेन ( स्वस्थानादिवीर्येण ) युते सति शङ्खनामको योगः स्यात्। अथ योगान्तरमाह—लग्नाधिपे, गगनाधिपतौ = दशमेशे च ( च शब्दः पुनरर्थे ) चरस्थे ( १।४।७।१० राशीनामन्यतमस्थे ) सति, भाग्याधिपे = नवमेशे तु बलयुते तथाऽर्थाच्छङ्खयोगं वदन्ति मनीषिणः इति। तत्फलञ्च शङ्खे जात इत्यादिना स्पष्टार्थेन श्लोकेनाहेति ॥ १३८-१३९ ॥

| | | |
|---|---|---|
| ३ / ४ | शु. २ ल. | १ / १२ |
| ५ बु. | शङ्खयोगः ।. | ११ |
| ६ / ७ | ८ | १० मं. / ९ |

| | | |
|---|---|---|
| ३ / ४ शु. | २ ल. | १ / १ |
| ५ | शङ्खयोगः ॥. | ११ |
| ६ / ७ | ८ | १० श. / ९ |

पुत्रेश और षष्ठेश परस्पर केन्द्रमें स्थित हों लग्नेश बलवान् हो तो "शङ्ख" योग होता है। लग्नेश और दशमेश चरराशिमें हों भाग्येश बली हो तो 'शङ्ख' योग होता है ॥ १३८ ॥

शंखयोगमें उत्पन्न होनेवाला भोगशील, दयालु, स्त्रीवान्, पुत्रवान्, क्षेत्रवान्, पुण्यकर्मा, शास्त्र ज्ञान द्वारा आचार और साधु क्रिया वाला और लोक में ८० वर्ष जीनेवाला होता है॥

## अथ भेरीयोगः।

स्वान्त्योदयास्तभवनेषु वियच्चरेषु कर्माधिपे बलयुते यदि भेरियोगः।
केन्द्रं गतौ सुरगुरोः सितलग्ननाथौ भाग्येश्वरे बलयुते तु तथैव वाच्यम् ॥१४०॥
दीर्घायुषो विगतरोगभया नरेन्द्राः बह्वर्थभूमिसुतदारयुताः प्रसिद्धाः।
आचारभूरिसुखशौर्यमहानुभावाः भेरीप्रजातमनुजा निपुणाः कुलीनाः ॥१४१॥

इदानीं भेरीयोगं तस्य फलञ्चाह—स्वान्त्येति। स्वान्त्योदयास्तभवनेषु = द्वितीयद्वादशप्रथमसप्तमभावेषु, वियच्चरेषु = ग्रहेषु यथासम्भवं विद्यमानेषु यदि कर्माधिपे = दशमेशे बलयुते = सबले सति भेरियोगो भवति। अथ च सुरगुरोः = बृहस्पतेः सकाशात्, केन्द्रे (१।४।७।१० एतदन्यतमभावं) गतौ, सितलग्ननाथौ = शुक्र-जन्मलग्नेशौ भवेतां, भाग्येश्वरे = नवमेशे तु बलयुते तथैव वाच्यमर्थात् भेरीयोगः स्यादिति वाच्यम्। तस्य भेरीयोगस्य फलं दीर्घायुष इत्यनेन सुखावगमेनोक्तमिति ॥ १४०–१४१ ॥

यदि दूसरे, बारहवें, लग्न और सप्तममें ग्रह हों दशमेश बली हो तो 'भेरी' योग होता है। बृहस्पतिसे केन्द्रमें शुक्र और लग्नेश हों और भाग्येश बलवान् हो तो "भेरी" योग होताहै॥

भेरीयोगका जातक दीर्घायु, रोग-भयसे रहित, राजा, बहुत धन-भूमि-पुत्र-स्त्रीसे युत, प्रसिद्ध, आचारवान्, पूर्ण सुखी, पराक्रमसे युत, महानुभाव, प्रत्येक कार्यमें निपुण तथा कुलीन होता है ॥ १४१ ॥

| शु.चं.बु.२ / ३ | सू. १ | बृ.१२ / ११ |
|---|---|---|
| ४ | भेरी-योगः १. | १० |
| ५ / ६ | मं. ७ श. | ९ / ८ |

| २ / ३ | १ | १२ / ११ |
|---|---|---|
| ४ बृ. | भेरी-योगः ॥ | मं. १० |
| ५ / ६ | ७ शु. | ९ / ८ |

## अथ मृदङ्गयोगः।

उच्चग्रहांशकपतौ यदि कोणकेन्द्रे तुङ्गस्वकीयभवनोपगते बलाढ्ये।
लग्नाधिपे बलयुते तु मृदङ्गयोगः कल्याणरूपनृपतुल्ययशःप्रदः स्यात् ॥१४२॥

इदानीं मृदङ्गयोग उच्यते—उच्चेति। उच्चग्रहांशकपतौ = जन्मकाले यो ग्रहः स्वोच्चराशिस्थः स यद्राशिसम्बन्धिनवांशे व्यवस्थितो भवेत्तन्नवांशराशिपतौ ग्रहे यदि लग्नात् केन्द्रकोणे (१।४।७।१०।५।९ एतदन्यतमे) याते, तुङ्गस्वकीयभवनोपगते = स्वोच्चे वा स्वराशौ गतवति बलाढ्ये च, लग्नाधिपे = लग्नेशे तु बल-

| २ / ३ | ल. १ | |
|---|---|---|
| ४ बृ. १२° | मृदङ्गयोगः | १० मं. |
| | ७ शु. | |

युते सति मृदङ्गयोगः स्यात् । अत्र यदुक्तमुच्चग्रहांशकपताविति, तत्र यदि द्वौ बहवो वा ग्रहा उच्चस्थाः स्युस्तदा बलवतो ग्रहणं कार्यमिति । मृदङ्गयोगफलमाह—कल्याणरूपनृपतुल्य यशःप्रदः स्यादिति स्पष्टमेवेति ॥१४२॥

यदि उच्चगत ग्रहका नवांशपति कोण या केन्द्रमेंहो और अपने उच्चगृही या स्वगृहीमें हो, बलवान् हो, और लग्नेश भी बली हो तो "मृदङ्ग" योग होता है । यह मृदङ्ग योग कल्याण, रूप और राजाके सदृश यश देनेवाला है ॥ १४२ ॥

### अथ श्रीनाथयोगः ।

कामेश्वरे कर्मगते, स्वतुङ्गे कर्माधिपे भाग्यपसंयुते च ।
श्रीनाथयोगः शुभदस्तदानीं जातो नरः शक्रसमो नृपालः ॥ १४३ ॥

इदानीं श्रीनाथयोग उच्यते—कामेश्वर इति । कामेश्वरे = सप्तमभावेशे, कर्मगते=दशमभावमुपगते, स्वतुङ्गे = स्वकीयोच्चराशिमुपगते कर्माधिपे = दशमेशे, भाग्यपेन ( नवमेशेन ) संयुते च सति शुभदः श्रीनाथयोगः स्यात् । तदानीं ( श्रीनाथयोगोपलक्षिते काले ) जातो नरः शक्रसमः = इन्द्रतुल्यः, नृपालः = राजा भवति ॥ १४३ ॥

ल. १
श्रीनाथः
१० शु.
९
बु. ७ श.

सप्तमेश कर्ममें हो और कर्मेश अपनी उच्च राशिमें स्थित होकर भाग्येशके साथ होतो "श्रीनाथ" योग होता है । इस योगका जातक इन्द्रके समान राजा होता है ॥ १४३ ॥

### अथ शारदयोगः ।

योगः शारदसंज्ञकः सुतगते कर्माधिपे चन्द्रजे
केन्द्रस्थे दिननायके निजगृहप्राप्तेऽतिवीर्यान्विते ॥
चन्द्रात् कोणगते पुरन्दरगुरौ सौम्यत्रिकोणे कुजे
लाभे वा यदि देवमन्त्रिणि बुधात्तच्छारदासंज्ञकः ॥ १४४ ॥

स्त्रीपुत्रबन्धुसुखरूपगुणानुरक्ताः भूपप्रिया गुरुमहीसुरदेवभक्ताः ।
विद्याविदोदरतिशीलतपोबलाढ्याः जाताः स्वधर्मनिरता भुवि शारदाख्ये ॥१४५॥

इदानीं शारदयोगं तस्य फलञ्चाह—योग इति । कर्माधिपे = दशमेशे, सुतगते = पञ्चमभावगते, चन्द्रजे = बुधे, केन्द्र-( १।४।७ १० भाव- ) गते, दिननायके=सूर्ये, निजगृहप्राप्ते = सिंहराशिमुपगतेऽतिवीर्यान्विते ( पूर्णबलयुक्ते ) शारदसंज्ञकः योगः स्यात् । योगान्तरमाह—पुरन्दरगुरौ=बृहस्पतौ, चन्द्रात् यत्र तत्र गतात् , कोणगते ( ९।५ भावगते ), कुजे=भौमे, सौम्यत्रिकोणे = बुधात् पञ्चमं नवमं वोपगते. अथवा देवमन्त्रिणि = गुरौ बुधात् यदि लाभे=एकादशमुपगते सति तच्छारदसंज्ञको योगो भवति ॥ शारदयोगफलमाह—स्त्रीपुत्रेत्यादिना स्पष्टार्थेन ॥ १४४–१४५ ॥

२ १ ३ ४ बु. शारदः । १० श. र. ५

बु. बृ. चं. शारदः ॥ मं.

१. यदि कर्मेश पञ्चममें हो, बुध केन्द्रमें हो, अत्यन्त बलवान् सूर्य सिंह राशिका हो, वा २. चन्द्रमासे त्रिकोणमें गुरु हो, बुधसे त्रिकोणमें मङ्गल हो, बुधसे बृहस्पति लाभमें हो तो ये दोनों 'शारदा योग' होते हैं ॥ १४४ ॥

शारदा योगका जातक स्त्री-पुत्र-बन्धु-सुख-गुणमें अनुरक्त, राजाके प्रिय, गुरु-ब्राह्मण-देवताका भक्त, विद्याविनोदी, कामुक, तप, तथा बलसे युत, अपने धर्ममें लीन रहनेवाले होते हैं ॥ १४५ ॥

### अथ मत्स्ययोगः ।

लग्नधर्मगते पापे पञ्चमे सदसद्युते ।
चतुरस्रं गते पापे योगोऽयं मत्स्यसंज्ञकः ॥ १४६ ॥
कालज्ञः करुणासिन्धुर्गुणधीबलरूपवान् ।
यशोविद्यातपस्वी च मत्स्ययोगसमुद्भवः ॥ १४७ ॥

अधुना मत्स्ययोगं तत्फलञ्चाह—लग्नधर्मगत इति । लग्नधर्मगते=लग्नान्नवमे भावे स्थिते कस्मिंश्चित्पापग्रहे, पञ्चमे=लग्नात्पञ्चमे भावे सदसद्भ्यां = शुभपापग्रहाभ्यां युते, चतुरस्रं=लग्नात् चतुर्थेऽष्टमे वा भावे गतवति कस्मिंश्चित्पापे सत्ययं योगो मत्स्यसंज्ञको भवति । तत्फलं कालज्ञ इति सरलार्थेनाह ॥ १४६-१४७ ॥

लग्नसे धर्म ९ भाव पाप ग्रहसे युक्त हो पञ्चमभाव पापग्रह और शुभग्रहसे युक्त हो, चौथे वा आठवें पापग्रह हो तो 'मत्स्य' योग होता है ॥ १४६ ॥

मत्स्य योगका जातक कालका ज्ञाता, अत्यन्त दयालु, गुणवान्, बुद्धिमान्, रूपवान्, यशस्वी, विद्वान्, तथा तपस्वी होता है ॥ १४७ ॥

### अथ कूर्मयोगः ।

कलत्रपुत्रारिगृहेषु सौम्याः स्वतुङ्गमित्रांशकराशियाताः ।
तृतीयलाभोदयगास्त्वसौम्या मित्रोच्चसंस्था यदि कूर्मयोगः ॥ १४८ ॥
विख्यातकीर्तिर्भुवि राजभोगी धर्माधिकः सत्त्वगुणप्रधानः ।
धीरः सुखी वागुपकारकर्ता कूर्मोद्भवो मानवनायको वा ॥ १४९ ॥

इदानीं कूर्मयोगस्तत्फलञ्चोच्यते—कलत्रेति । स्वतुङ्गमित्रांशकराशियाताः—स्वकीयोच्च-

मित्रग्रहनवांशस्वराशीनामन्यतमोपगताः सौम्याः, फलत्रपुत्रारिगृहेषु=सप्तम-पञ्चम-षष्ठभावेषु स्थिता भवेयुः, मित्रोच्चसंस्थाः=स्वमित्रग्रहराशावुच्चे वा व्यवस्थिता असौम्याः=पापा यदि तृतीय-लाभोदयगाः=तृतीयैकादशलग्नगता भवेयुस्तदा कूर्मयोगो भवति । तत्फलं च विख्यातकीर्तिरित्यनेन सरलार्थकेनोक्तमिति ॥

कूर्म योगः
- रा. ल. १
- श. ३
- ११ मं. १२
- बु. १२
- ६ शु.
- ७ गु.

यदि अपने उच्चका, वा मित्रांश, वा स्वकीय राशिका शुभग्रह सप्तम, पञ्चम और षष्ठ गृहमें हों और पाप ग्रह तृतीय, लाभ और लग्नमें अपने मित्रगृह वा उच्चमें हो तो "कूर्म" योग होता है ॥ १४८ ॥

कूर्म योगमें उत्पन्न जातक पृथ्वीपर विख्यात कीर्तिवाला, राज-सुखका भोगी, धर्मात्मा, सात्विक गुणवाला, धैर्यवान्, सुखी, वक्ता, परोपकारी, या मनुष्योंका नायक ( राजा ) होता है ॥ १४९ ॥

## अथ खड्गयोगः ।

भाग्येशे धनभावस्थे धनेशे भाग्यराशिगे ।
लग्नेशे केन्द्रकोणस्थे खड्गयोग इतीरितः ॥ १५० ॥
वेदार्थशास्त्रनिखिलागमतत्त्वयुक्तिबुद्धिप्रतापबलवीर्यसुखानुरक्ताः ।
निर्मत्सराश्च निजवीर्यमहानुभावाः खड्गे भवन्ति पुरुषाः कुशलाः कृतज्ञाः॥१५१॥

इदानीं सरलार्थेन श्लोकेन खड्गयोगं, तत्फलं स्पष्टार्थमाह-भाग्येश इति ॥

खड्गयोगः
- ल. २ शु.
- सू.
- ५
- ६
- ७
- ८
- ९
- १० बु.

यदि भाग्येश धन भावमें हो, धनेश भाग्य राशिमें हो और लग्नेश केन्द्र या कोणमें स्थित हो तो खड्ग योग होता है॥

इस खड्ग योगमें उत्पन्न जातक वेद के अर्थको जाननेवाला, सभी शास्त्रों तथा ज्योतिष और तन्त्रोंके तत्त्वको जाननेवाला हो। वह बुद्धि, प्रताप, बल तथा पराक्रमसे सुखी रहे। मत्सरता रहित और अपने पराक्रमसे श्रेष्ठ हो । खड्गयोगमें उत्पन्न पुरुष कार्यकुशल, तथा कृतज्ञ होता है ॥ १५१ ॥

## अथ लक्ष्मीयोगः ।

केन्द्रे मूलत्रिकोणस्थे भाग्येशे परमोच्चगे ।
लग्नाधिपे बलाढ्ये च लक्ष्मीयोग इतीरितः ॥ १५२ ॥
गुणाभिरामो बहुदेशनाथो विद्यामहाकीर्तिरनङ्गरूपः ।
दिगन्तविश्रान्तनृपालवन्द्यो राजाधिराजो बहुदारपुत्रः ॥ १५३ ॥

इदानीं लक्ष्मीयोगं तत्फलञ्चाह—केन्द्र इति। भाग्येशे=नवमभावेशे, मूलत्रिकोणस्थे, वा परमोच्चगे सति केन्द्रे व्यवस्थिते, लग्नाधिपे=जन्मलग्नेशे, बलाढ्ये=स्थानादिवीर्ययुते च लक्ष्मीयोगः स्यादिति मनीषिभिरीरितः=कथितः। तथाहि—

परमोच्चगते केन्द्रे भाग्यनाथे शुभेक्षिते।
लग्नाधिपे बलाढ्ये तु लक्ष्मीयोग इतीरितः॥ जातकादेशे।

| | | |
|---|---|---|
| | १ ल. | |
| ४ बृ. ५ | लक्ष्मीयोगः | मं. १० |
| | | ९ |

एवं च—स्वर्क्षोच्चे यदि कोणकण्टकयुतौ भाग्येशशुक्रावुभौ लक्ष्म्याख्यः।
इति फलदीपिकायाम्।

लक्ष्मीयोगस्य फलञ्च सरलार्थेन 'गुणाभिराम' इति श्लोकेनोक्तमिति ॥१५२-१५३॥

यदि भाग्येश परमोच्चमें या मूलत्रिकोणमें होकर केन्द्रमें स्थित हो और लग्नेश बलवान् हो तो वह 'लक्ष्मीयोग' होता है ॥ १५२ ॥

इस लक्ष्मी योगमें जातक सुन्दर गुणवाला, बहुत देशका स्वामी, विद्या और कीर्तिसे युक्त तथा कामदेवके सदृश सुन्दर रूपवाला, दश दिशाओंमें राजोंसे पूजनीय, श्रेष्ठ राजा और बहुत स्त्री तथा पुत्रवाला होवे ॥ १५३ ॥

## अथ कुसुमयोगः।

स्थिरलग्ने भृगौ केन्द्रे त्रिकोणेन्दौ शुभेतरे।
मानस्थानगते सौरे योगोऽयं कुसुमो भवेत् ॥ १५४ ॥
दाता महीमण्डलनाथवन्द्यो भोगी महावंशजराजमुख्यः।
लोके महाकीर्तियुतः प्रतापी नाथो नराणां कुसुमोद्भवः स्यात् ॥१५५॥

| | | |
|---|---|---|
| ३ / ४ | २ शु. | १ / १२ |
| ५ | कुसुम योगः। | ११ शः |
| ६ चं. / ७ | ८ | १० / ९ |

इदानीं कुसुमयोगं तत्फलञ्चाह—स्थिरलग्न इति। स्थिरलग्ने=२, ५, ८, ११ एतदन्यतमराशौ व्यवस्थिते भृगौ=शुक्रे, केन्द्रे गतवति, शुभेतरे = नवमभावरहिते, त्रिकोणेन्दौ=त्रिकोणगतचन्द्रे, (त्रिकोणशब्देन पञ्चमनवमौ भावौ गृह्येते तत्र 'शुभेतरे' इत्यनेन पञ्चमभाव एवावशिष्टस्तेन चन्द्रे पञ्चमभावगते इत्यर्थः) सौरे=शनैश्चरे मानस्थानगते = दशमभावमुपगते सति अयं योगः कुसुमः' भवेत्। तत्फलञ्च स्पष्टमेव ॥ १५४-१५५ ॥

स्थिर लग्नमें शुक्र केन्द्रमें हो, चन्द्रमा शुभतर त्रिकोणमें हो याने ५ वें भावमें हो और शनि दशवें हो तो वह "कुसुम" योग होता है ॥ १५४ ॥

कुसुम योगमें उत्पन्न जातक दानी, राजा से पूजित, भोगी, उत्तम कुलमें उत्पन्न, राजोंमें मुख्य, समस्त लोकोंमें यशस्वी, प्रतापी राजा होता है ॥ १५५ ॥

## अथ पारिजातयोगः।

विलग्ननाथस्थितराशिनाथस्थानेश्वरो वाऽपि [तदंशनाथः।
केन्द्रत्रिकोणोपगतो यदि स्यात्स्वतुङ्गगो वा यदि परिजातः ॥ १५६ ॥

मध्यान्तसौख्यः क्षितिपालवन्द्यो युद्धप्रियो वारणवाजियुक्तः ।
स्वकर्मधर्माभिरतो दयालुर्योगे नृपः स्याद्यदि पारिजातः ॥ १५७ ॥

| | | |
|---|---|---|
| २ चं. १०° | १ | |
| मं ४ | पारिजातः | |
| | शु. ७ | ९ बृ. |

इदानीं पारिजातयोगमाह-विलग्नेति । विलग्ननाथो जन्मलग्नेशो यत्र स्थितः स्यात्तद्राशिनाथो यस्मिन्स्थाने भवेत्तदीश्वरः वा तदंशनाथः = लग्ननाथस्थितराशिनाथस्थनवांशपतिः । एतदुक्तं भवति । लग्नेशो यत्र तिष्ठति तस्य राशेरधिपतिर्यस्मिन् राशौ भवेत्तद्राशीशो वा लग्नेशाधिष्ठितराशीशो यस्मिन्नवांशे भवेत्तन्नवांशपतिः केन्द्रत्रिकोणाना-( १।४।७।१०।५।९ ) मन्यतमे प्राप्तो यदि स्यादथवा यदि स्वतुङ्गो निजोच्चराशिं गतो भवेत्तदा 'पारिजातः' योगो ज्ञेयः । यथा—अत्रोदाहृते मेषलग्नेशो भौमः कर्कगतः, कर्कराशीशश्चन्द्रो दशभिरंशैर्वृषे वर्त्तते । वृषराशौ दशभिरंशैर्गुरोर्नवांशः । अतो नवांशेशो गुरुस्त्रिकोणे वृषराशीशः शुक्रोऽपि केन्द्रे वर्त्तते, तेन प्रकारद्वयेन पारिजातस्य लक्षणं सङ्घटत इति । फलमपि स्पष्टमेव ॥ १५६-१५७ ॥

लग्नेश जिस राशिमें हो उस राशि का स्वामी जिस राशिमें हो उसका स्वामी या उसका नवांशपति यदि केन्द्र या त्रिकोणमें प्राप्त हो, अथवा अपनी उच्च राशिमें हो तो "पारिजात" योग होता है ॥ १५६ ॥

पारिजात योगमें उत्पन्न जातक मध्य और अन्त्य अवस्थामें सौख्ययुक्त, राजाओंसे पूजित, युद्धप्रिय, हाथी-घोड़ोंसे युक्त अपने कर्म-धर्ममें रत और दयालु राजा होता है १५७

अथ कलानिधियोगः ।

द्वितीये पञ्चमे जीवे बुधशुक्रयुतेक्षिते ।
क्षेत्रे तयोर्वा सम्प्राप्ते योगः स्यात्स कलानिधिः ॥ १५८ ॥
कामी कलानिधिभवः सगुणाभिरामः संस्तूयमानचरणो नरपालमुख्यैः ।
सेनातुरङ्गमदवारणशङ्खभेरीवाद्यान्वितो विगतरोगभयारिसङ्घः ॥ १५९ ॥

इदानीं कलानिधियोगमाह—द्वितीये इति । बुधेन शुक्रेण च युते, वा दृष्टे, वा तयोः बुधशुक्रयोः क्षेत्रे ( ३, ६, २, ७ ) सम्प्राप्ते, जीवे = बृहस्पतौ द्वितीये वा पञ्चमे भावे व्यवस्थिते सति स योगः कलानिधिः ज्ञेयः । तत्फलञ्च 'कामी'त्यादिश्लोकेन स्पष्टार्थेनोक्तमित्यलम् ॥ १५८-१५९ ॥

यदि बृहस्पति दूसरे या पांचवें भावमें बुध और शुक्र से युक्त या देखा जाता हो, अथवा उन्हींके गृहमें प्राप्त हो तो वह 'कलानिधि योग' होता है ॥ १५८ ॥

इस कलानिधि योगमें उत्पन्न बालक कामी, सुन्दर गुणवाला, बड़े बड़े राजाओंसे पूजित, सेना घोड़े मतवाले हाथीसे युत हो, तथा नित्य उसके यहाँ शंख और भेरी बजती रहें । वह रोग रहित तथा शत्रुगणों से निर्भय रहे ॥ १५९ ॥

अथ अंशावतारयोगः।

केन्द्रगौ सितदेवेज्यौ स्वोच्चे केन्द्रगतेऽर्कजे।
चरलग्ने यदा जन्म योगोऽयमवतारजः ॥ १६० ॥
पुण्यश्लोकस्तीर्थचारी कलाज्ञः कामासक्तः कालकर्ता जितात्मा।
वेदान्तज्ञो वेदशास्त्राधिकारी जातो राजश्रीधरोंऽशावतारे ॥ १६१ ॥

अधुना अंशावतारयोगस्तत्फलञ्चोच्येते। सितदेवेज्यौ = शुक्रगुरु, केन्द्रगौ चरराशिगतौ भवेतां (चरलग्न इत्युक्तत्वात्), अर्कजे = शनैश्चरे, स्वोच्चे तुलायां केन्द्रगते, चरलग्ने = मेषकर्कतुलामकरान्यतमे राशौ लग्ने, यदा जन्म भवेत्तदा अयं अवतारजः योगो भवति। अस्मिन्योगे जातो नरः - पुण्यश्लोकः, तीर्थचारी, कलाज्ञः, कामासक्तः, कालकर्त्ता, जितात्मा, वेदान्तज्ञः, वेदशास्त्राधिकारी, राजश्रीधरश्च भवति ॥ १६०-१६१ ॥

यदि शुक्र और बृहस्पति केन्द्रमें हों, शनैश्चर अपने उच्च का होकर केन्द्रमें स्थित हो और चरलग्नमें जन्म हो तो यह 'अवतार' योग कहा जाता है ॥ १६० ॥

अंशावतार योग में उत्पन्न जातक पुण्यचरित्रवाला, तीर्थसेवी, कलावित् काममें आसक्त, सामयिक, जितेन्द्रिय, वेदके तत्त्वको जाननेवाला, वेद और शास्त्र का अधिकारी और राज्यश्रीवाला पुरुष होता है ॥ १६१ ॥

अथ हरि-हर-विधियोगाः।

वित्तेशाद्धनरिःफरन्ध्रभवनप्राप्ताश्च सौम्यग्रहाः,
कामेशात् सुखभाग्यरन्ध्रगृहगा जीवाब्जचन्द्रात्मजाः।
देहेशाद्यदि बन्धुमानभवगा सूर्यास्फुजिद्भूमिजाः
प्रोक्तास्तत्र पुरातनैर्हरिहरब्रह्माख्ययोगा इमे ॥ १६२ ॥
निखिलनिगमविद्यापारगः सत्यवादी सकलसुखसमेतश्चारुवाक् कामशीलः।
जितरिपुकुलसङ्घः सर्वजीवोपकारी हरिहरविधियोगे सम्भवः पुण्यकर्मा १६३

इदानीं हरिहरब्रह्मयोगान् तत्फलानि चाह—वित्तेशादिति। हरियोगः-वित्तेशात्= द्वितीयभावपतेः सकाशात्, धनरिःफरन्ध्रभवनप्राप्ताः=द्वितीय-द्वादशा-ष्टमभावानुपगताः, सौम्यग्रहाः=शुभग्रहाः (यथासम्भवम्) भवेयुस्तदा हरियोगः।

१. हरियोगोदाहरणम्।

हरयोग-कामेशात्=सप्तमभावेशात्, सुखभाग्यरन्ध्रगृहगाः=चतुर्थ-नवमा-ष्टमभावगताः, जीवाब्जचन्द्रात्मजाः=गुरुचन्द्रबुधा भवेयुस्तदा हरयोगः।

ब्रह्मयोगः-देहेशात्=जन्मलग्नेशात्, बन्धुमानभवगाः = चतुर्थदशमैकादशभावगता यदि सूर्यास्फुजिद्भूमिजाः=सूर्यशुक्रभौमा भवेयुस्तदा ब्रह्माख्यः (ब्रह्म) योगः। पुरातनैर्वृद्धैर्मनीषिभिः इमे त्रयो योगाः प्रोक्ता इति।

उक्तयोगत्रयस्य फलानि सरलार्थकानि चेति ॥ १६२-१६३ ॥

२. हरयोगोदाहरणम्। ३. विधियोगोदाहरणम्।

द्वितीयेशसे २।१२।८ स्थानोंमें शुभग्रह हों तो 'हरि' योग होता है।

सप्तमेशसे ४।९।८ स्थानोंमें यथा सम्भव गुरु, चन्द्रमा और बुध हों तो 'हर' योग होता है।

लग्नेशसे ४।१०।११ स्थानोंमें यथा सम्भव सूर्य, शुक्र और मङ्गल हों तो 'ब्रह्म' योग होता है ऐसा प्राचीन आचार्योंने कहा है। ( सु० शा० कार )॥ १६२॥

इन तीनों हरि-हर तथा विधि योगोंमें उत्पन्न हुआ जातक सभी शास्त्रोंको जाननेवाला सत्यवादी, सकल सुखका भोगी, प्रियवादी, कामशील, सब शत्रुओंको जीतनेवाला, सब जीवोंका उपकारकर्त्ता तथा पुण्य कर्म करनेवाला होता है॥ १६३॥

## अथ नाभसयोगाः।

यूपेषुशक्तियवदण्डगदासमुद्रच्छत्रार्द्धचन्द्रशकटाम्बुजपत्तियोगाः।
नौचक्रवज्रहलकार्मुककूटवापीशृङ्गाटकाश्च विविधाकृतिविंशतिः स्युः॥ १६४॥
रज्जुर्नलश्च मुसलस्त्रित याश्रयाख्याः स्रग्भोगिनौ तु दलयोगभवौ भवेताम्।
वीणादयश्च कथिता वरदामपाशकेदारशूलयुगगोलकसप्तसङ्ख्याः॥ १६५॥

इदानीं नाभसयोगा उच्यन्ते। तेषु यूपादयो विंशतिराकृतियोगाः। रज्ज्वादयस्त्रय आश्रययोगाः। स्रक्सर्पौ द्वौ दलयोगौ। वीणादयः सप्त सङ्ख्यायोगाश्चेति विकल्पचतुष्टयम्। तत्राकृतियोगाः—१. यूपः, २. इषुः, ३. शक्तिः, ४. यवः, ५. दण्डम्, ६. गदा, ७. समुद्रः, ८. छत्रम्, ९. अर्द्धचन्द्रम्, १०. शकटम्, ११. अम्बुजम्, १२. पक्षियोगः, १३. नौः, १४. चक्रम्, १५. वज्रम्, १६. हलम्, १७. कार्मुकम्, १८ कूटम्, १९. वापी, २० शृङ्गाटकः। इति विंशतियोगाः। आश्रययोगाः—१. रज्जुः, २. नलः, ३. मुसलः, इति त्रयः। दलयोगौ—१. स्रक्, २. सर्पः, इति द्वौ। संख्यायोगाः—१. वीणा, २. वरदामः, ३. पाशः, ४. केदारः, ५. शूलम्, ६. युगम्, ७. गोलकम्, इति सप्त योगाः। एतेषां लक्षणानि फलानि चाग्रतो वक्ष्यति॥ १६४-१६५॥

१. यूप, २ इषु, ३ शक्ति, ४ यव, ५ दण्ड, ६ गदा, ७ समुद्र, ८ छत्र, ९ अर्धचन्द्र, १० शकट, ११ अम्बुज, १२ पक्षि, १३ नौ, १४ चक्र, १५ वज्र, १६ हल, १७ कार्मुक, १८ कूट, १९ वापी और २० शृङ्गाटक इस प्रकार विविध आकृति के बीस योग हैं। १ रज्जु, २ नल, और ३ मुसल ये तीन आश्रय योग हैं। १ स्रक् और २ सर्प, ये दो दल योग हैं, और १ वीणा, २ वरदाम, ३ पाश, ४ केदार, ५ शूल, ६ युग, ७ गोलक ये सात 'संख्या-योग हैं॥ १६४-१६५॥

## होरायाम्-

इदानीमाश्रययोगत्रयस्य दलयोगद्वयस्य च लक्षणमाह—

रज्जुर्मुसलं नलं चराद्यैः सत्यस्त्वाश्रयजान् जगाद योगान्।
केन्द्रैः सदसद्युतैर्दलाख्यौ स्रक्सर्पौ कथितौ पराशरेण॥ १६६॥

रज्जुरिति। चराद्यैः=चर-स्थिर-द्विभावगतैर्ग्रहैः क्रमेण रज्जुः, मुसलं, नल इति त्रीन्

योगानाश्रयजान् सत्याचार्यो जगाद । अत्रैतदुक्तं भवति । एकस्मिन् चरराशौ, द्वयोस्त्रिषु वा चतुर्षु चरराशिषु यदा सर्वे ग्रहा भवेयुर्न स्थिरे द्वन्द्वे च कश्चिद् ग्रहः स्यात्तदा रज्जुः योगः । एकस्मिन् द्वयोस्त्रिषु वा चतुर्षु स्थिरराशिषु सर्वे ग्रहाः स्युर्न कश्चिच्चरे द्वन्द्वे च भवेत्तदा मुसलः योगः । एवं द्विस्वभावेऽपि सर्वैः ग्रहैः नलो योगो ज्ञेयः । उक्तञ्च—

एको द्वौ वा त्रयः सर्वे चरा युक्ता यदा ग्रहैः । चरयोगस्तदा रज्जुः दुःखिनां जन्मदो भवेत् ॥
स्थिराश्चेन्मुसलं नाम मानिनां जन्मकृन्नृणाम् । द्विस्वभावो नलाख्यस्तु धनिनां परिकीर्तितः ॥ इति ।

दलयोगावाह—केन्द्रैरिति । यदि शुभग्रहाः केन्द्रेषु भवेयुर्न कश्चित्पापः केन्द्रवर्ती स्यात्तदा स्रक् ( माला ) योगो भवति । यदि पापग्रहाः केन्द्रेषु भवेयुर्न कश्चिच्छुभः केन्द्रगस्तदा सर्पयोगो ज्ञेयः इति स्रक्सर्पौ योगौ पराशरेण कथितौ ।

Notes—चन्द्रो हि शुक्लकृष्णपक्षभेदेन शुभत्वं पापत्वं चाप्नोति । तेन शुक्ले सचन्द्रा बुधगुरुशुक्राश्चतुर्षु केन्द्रेषु शुभा इति । कृष्णे सचन्द्रा भौमरविशनयश्चत्वारः पापाश्चतुर्षु केन्द्रेषु भवेयुरन्यथा त्रयः शुभाः पापाश्च त्रिषु केन्द्रेष्विति विवेचनीयमिति ॥ १६६ ॥

सभी ग्रह चर राशिमें हों तो रज्जु योग होता है । सभी ग्रह स्थिर राशिमें हों तो "मुसल" योग होता है और सभी ग्रह द्विस्वभाव राशिमें हों तो "नल" योग होता है । ये तीन आश्रयज योग सत्याचार्य कहे हैं । स्रक् और सर्प ये दलयोग दो प्रकारके होते हैं । सब शुभग्रह केन्द्रमें हों पापग्रह केन्द्रमें न हों तो "माला" योग होता है । केन्द्रमें सब पापग्रह हों केन्द्रमें शुभग्रह न हों तो "सर्प" योग होता है । ऐसा पराशर ने कहा है ॥ १६६ ॥

१. रज्जुयोगोदाहरणम् ।

ल.सू. १शु.बु.
बृ. ४ चं.
मं. १० श.
७

२. मुसलयोगोदाहरणम् ।

३. नलयोगोदाहरणम् ।

४. स्रक्-योगोदाहरणम् ।

५. सर्पयोगोदाहरणम् ।

इदानीं प्राक्तनैः कैश्चिदाश्रयदलयोगाः कथं नोक्तास्तस्य कारणमाह—

**योगा व्रजन्त्याश्रयजाः समत्वं यवाब्जवज्राण्डजगोलकाद्यैः।**
**केन्द्रोपगप्रोक्तफलौ दलाख्यावित्याहुरन्ये न पृथक् फलौ तौ॥ १६७॥**

योगा इति। आश्रयजा योगाः-रज्जुर्मुसलो नलश्चेति त्रयो योगाः, यवाब्जवज्राण्डजगोलकाद्यैर्यो गैः समत्वं = तुल्यत्वमुपगच्छन्ति (कथं समत्वं यान्तीति यवादियोगलक्षणे द्रष्टव्यम्) अतोऽन्यैर्नोक्ता इति। दलाख्यौ = स्रक्सर्पौ, केन्द्रोपगप्रोक्तफलौ = केन्द्रेषु व्यवस्थितैर्ग्रहैर्यत्प्रोक्तं फलं तद्वन्तौ। स्रक् योगस्तु शुभैः केन्द्रगैरुक्तः। सर्पयोगः पापैः केन्द्रगैरुक्तः। केन्द्रत्रिकोणेषु शुभाः प्रशस्तास्तेष्वेव पापा न शुभप्रदाः स्युरिति वचनात्केन्द्रेषु शुभाः शुभं फलं, पापाः पाप फलं ददति, तेन तौ स्रक्सर्पौ न पृथक्फलौ (उक्तार्थत्वात्) इति अन्ये विज्ञा आहुः। पुनरुक्तदोषभयान्नाहुरिति भावः॥ १६७॥

आश्रय (रज्जु-मुसल-नल) योगके फल यव-पद्म-वज्र-पक्षि-गोलक-युग-केदार-शूल योगोंके फलके समान होते हैं, इस लिये अन्य आचार्योंने उन्हें नहीं कहे। दल (स्रक्-सर्प) योग केन्द्रगत शुभ और पापग्रहके फलके समान फलवाले हैं इस लिये फलमें कुछ विशेषता नहीं होनेके कारण प्राचीनोंने दलयोगको नहीं कहा। (बृ० जा० कार)॥ १६७॥

इदानीं गदाशकटविहगशृङ्गाटकहलान् पञ्च योगानाह—

**आसन्नकेन्द्रभवनद्वयगैर्गदाख्यस्तन्वस्तगेषु शकटं विहगः खबन्ध्वोः।**
**शृङ्गाटकं नवमपञ्चमलग्नसंस्थैर्लग्नान्यगैर्हलमिति प्रवदन्ति तज्ज्ञाः॥ १६८॥**

आसन्नेति। आसन्ने = समीपवर्त्तिनि, केन्द्रभवनद्वये गतैः सकलैर्ग्रहैः गदाख्यो योगो भवति। एतदुक्तमवधेयम्। लग्नचतुर्थयोः, चतुर्थसप्तमयोः, सप्तमदशमयोः, दशमलग्नयोर्वा इति भेदचतुष्के कस्मिन्नप्येकस्मिन्भेदे सर्वे ग्रहा भवेयुस्तदा गदा योगः भवति। तन्वस्तगेषु = लग्नसप्तमगतेषु सकलग्रहेषु शकटं नाम योगः स्यात्। खबन्ध्वोः = दशमचतुर्थयोर्गतेषु ग्रहेषु विहगः = पक्षियोगः स्यात्। नवमपञ्चमलग्नसंस्थैः सर्वैर्ग्रहैः शृङ्गाटकं योगं वदन्ति। लग्नान्यगैः = लग्नेतरैरन्योन्यं त्रिकोणगतैः निखिलखेटैः हलं योगमिति तज्ज्ञा होराशास्त्रज्ञाः प्रवदन्ति। अर्थात् द्वितीय-षष्ठ-दशमोपगैः, वा तृतीय-सप्तम-लाभगैः, वा चतुर्थ-रन्ध्र-व्ययगैः सर्वग्रहैः हलयोगः स्यादिति। तथोक्तञ्च—

"लग्नाम्बुगैरम्बुनगस्थितैर्वा सप्ताम्बरैरम्बरलग्नसंस्थैः।
एवं चतुर्धा कथितो गदाख्यः शुभाशुभैः खेचरकैस्तु सर्वैः।
लग्नास्तगैस्तु शकटं, विहङ्गः सुखकर्मगैः। लग्नपञ्चमनन्दस्थैः खगैः शृङ्गाटकं स्मृतम्॥
द्वितीयषट्कर्मस्थैस्त्रिसप्तायगतैः खगैः। बन्धुनैधनरिःफस्थैस्त्रिधा तु हलसञ्ज्ञकः॥ इति १६८॥

सभी ग्रह दो समीपके केन्द्रमें हों तो 'गदा' योग होता है। यह गदा योग चार प्रकार का है-१ लग्न और चतुर्थमें, २ चतुर्थ और सप्तममें, ३ सप्तम और १० में, दशम और लग्नमें सब ग्रह होने से होता है। सब ग्रह लग्न और सप्तममें हों तो "शकट" योग होता है। समस्त ग्रह दशम और चतुर्थमें हो "विहग-योग" होता है। सब ग्रह नवम, पंचम और लग्नमें हों तो शृङ्गाटक योग होता है। लग्न को छोड़कर सबग्रह परस्पर त्रिकोणमें हो तो "हल" योग होता है। हलयोग के

३ भेद हैं। २।६।१० तथा ३।७।११ और ४।८।१२ भावोंमें सब ग्रह हों तो इक योग होते हैं ॥

| | | |
|---|---|---|
| | मं. र. शु. बु. | |
| | शकटम् | |
| | चं. मं. बृ. | |

| | | |
|---|---|---|
| | ल. | |
| र. बु. बृ. शु. | विहगः | श. मं. चं. |
| | | |

| | | |
|---|---|---|
| | र. बु. शु. | |
| | शृङ्गाटकम् | |
| चं. बृ. | | मं. श. |

| | | |
|---|---|---|
| | ल. | बृ. श. |
| र. बु. शु. | हलम् | |
| | | मं. चं. |

इदानीं वज्र-यव-कमल-वापीति योगचतुष्टयमाह–

शकटाण्डजवच्छुभाशुभैर्वज्रन्तद्विपरीतगैर्यवः ।
कमलं तु विमिश्रसंस्थितैर्वापी तद्यदि केन्द्रबाह्यतः ॥ १६६ ॥

शकटेति । शकटाण्डजवच्छुभाशुभैः = शकटयोगवच्छुभैर्व्यवस्थितैरण्डज ( विहग )-योगवदशुभैर्व्यवस्थितैः वज्रं स्यात् । अत्रेदमवधेयम् । लग्नसप्तमयोः शुभग्रहाः, चतुर्थ-दशमयोः पापग्रहाश्च भवेयुस्तदा वज्रयोगो भवति । तद्विपरीतगैर्यवः । चतुर्थदशमयोः शुभग्रहाः, लग्नसप्तमयोः पापग्रहाश्च भवेयुस्तदा यवयोगः स्यादिति । कमलं तु विमिश्र-संस्थितैः = तैरेव सौम्यासौम्यैः विमिश्रसंस्थितैः ( चतुर्ष्वपि केन्द्रेषु व्यवस्थितैः ) कमलयोगो भवति । वापी तद्यदि केन्द्रबाह्यतः । तत्कमलं यदि केन्द्रबाह्यतः स्यादर्थात्पणफरे वा आपोक्लिमे भवेत्तदा वापी स्यात् । सर्वैरेव ग्रहैः पणफरेषु, आपोक्लिमेषु वा संस्थितैः वापी योगो ज्ञेयः ।

| | | |
|---|---|---|
| | बु. शु. | |
| श. मं. | वज्रम् | सू. |
| | बृ. चं. | |

| | | |
|---|---|---|
| | मं. श. | |
| बृ. चं. | यवः | बु. शु. |
| | सू. | |

| | | |
|---|---|---|
| | मं. | |
| शु. र. बु. | कमलम् | बृ. श. |
| | चं. | |

| | | |
|---|---|---|
| मं. | | बृ.श. |
| | वापी | |
| र.शु.बृ. | | चं. |

**Notes**—अत्र लग्नसप्तमयोः शुभाः, चतुर्थदशमयोः पापाः स्युस्तदा वज्रं, तद्विपरीते यव इत्यादि यदुक्तं तज्ज्यौतिषसिद्धान्तविरुद्धमेव । यतो हि लग्नसप्तमयोः शुभग्रहेषु बधशुक्रौ लग्नसप्तमगौ भवेतां, सूर्यः, पापश्चतुर्थे दशमे वा भवेत्तदा, अथवा चतुर्थे दशमे बुधशुक्रौ, लग्ने वा सप्तमे सूर्ये इति तदा सूर्येण सह बुधशुक्रयोरन्तरं राशिचतुष्टयमिति परममसङ्गतम् । यतो मध्यमौ बुधशुक्रौ सूर्यसमावेव, तथा यदि बुधशुक्रयोः शीघ्रं मन्दं च फलं परममृणं, सूर्यस्य परमं फलं धनमथवा सूर्यस्य परमफलं ऋणं, बुधशुक्रयोः परमं फलद्वयं धनं कल्प्यते तदा स्पष्टयोः सूर्यबुधयोः परममन्तरं स्यात् । तत्र रवेः परममन्दफलम् = २°।१'।३१"। बुधस्य परमफलयुगलयोगः = २७°।३३'।३७", एतदैक्यम् = २°।१'।३३" ) + ( २७°।३३'।३७" ) = २९°।३५'।८", इदमेकराशितोऽप्यल्पं सूर्यबुधयोः परमान्तरं भवति । एवं शुक्रस्यापि । तेनैकराशितोऽधिकमन्तरं सूर्ये बुधयोर्न जातु भवितुमर्हति । कथं तर्हि राशिचतुष्टयेऽन्तरे सति प्राचीनैर्योगाः परिभाषिताः । अत आह वराहः पूर्वशास्त्रानुसारेण मया वज्रादयः कृताः । चतुर्थे भवने सूर्यात् ज्ञशुक्रौ भवतः कथम् ? इति ॥ वस्तुतोऽमी योगा न भवन्तीति भावः ॥ १६९ ॥

शकट योगके समान शुभग्रह ( १।७ में ) हों और अण्डज योगके समान ( ४।१० में ) पापग्रह हों तो "वज्रयोग" होता है। इसके विरीत ( १।७ में पापग्रह, ४।१० में शुभग्रह ) हों तो "यव" योग होता है । शुभग्रह और पापग्रह सब केन्द्रमें हों, अन्य पणफर आपोक्लिम में कोई भी न हों तो "कमल" योग होता है । यदि सभी केन्द्रके बाहर हों तो "वापी" योग होता है। उदाहरण चक्रोंमें देखिये ॥ १६९ ॥

इदानीं यूपेषु शक्तिदण्डयोगानाह—

कण्टकादिप्रवृत्तैश्च चतुर्गृहगतैर्ग्रहैः ।
यूपेषुशक्तिदण्डाख्या होराद्यैः कण्टकैः क्रमात् ॥ १७० ॥

कण्टकादीति । होराद्यैः = लग्नाद्यैः, कण्टकैः = केन्द्रैः लग्नकेन्द्रमारभ्य क्रमात्कण्टकादिप्रवृत्तेश्चतुर्षु गृहेषु गतैर्ग्रहैः यूपेषुशक्तिदण्डाख्याश्चत्वारो योगा भवन्ति । तथा हि—लग्न–द्वितीय–तृतीय–चतुर्थभावगतैः निखिलैर्ग्रहैः यूपयोगः । चतुर्थ–पञ्चम–षष्ठ–सप्तमेषु सर्वैर्ग्रहैरिषुयोगः । सप्तमादिदशमान्तेषु गतैः शक्तियोगः । दशमादिलग्नान्तेषु चतुर्षु सर्वैर्ग्रहैर्दण्डयोगो भवति । उक्तमपि तथा—

'एकद्वित्रिचतुर्थस्थैः सर्वखेटैस्तु यूपकम् । तुर्यादिसप्तमान्तस्थैरेवं बाणः प्रजायते ॥
सप्ताष्टनन्दकर्मस्थैः खगैः शक्तिरिति स्मृतः । दशादिलग्नपर्यन्तैः सर्वैर्दण्डाभिधानकः' ॥

इति ज्ञानमुक्तावल्याम् ॥ १७० ॥

लग्नसे चौथे भाव तक चारों गृहोंमें यदि सब ग्रह हों तो "यूप" योग, और यदि चौथे भावसे सप्तम भाव तक सब ग्रह हों तो "इषु" योग, तथा सप्तमसे दशम भाव तक सब ग्रह हों तो "शक्ति" योग, और दशम से लग्न पर्यन्त सब ग्रह हों तो "दण्डयोग" होता है ॥ १७० ॥

अधुना नौकूटच्छत्रचापार्द्धचन्द्रयोगानाह—

नौकूटच्छत्रचापानि तद्वत्सप्तर्क्षसंस्थितैः ।
अर्धचन्द्रस्तु होराद्यैः प्रोक्तादन्यर्क्षसंस्थितैः ॥ १७१ ॥

नौकूटेति । तद्वत् = पूर्वोक्त-( यूपादियोगोक्तप्रकार-) वत् , अर्थादेकस्मात्केन्द्रात्सप्तर्क्षसंस्थैः क्रमात् नौकूटच्छत्रचापानि स्युः । यथा च लग्नादिसप्तान्तेषु सप्तसु भावेषु सप्तग्रहा भवेयुस्तदा नौर्योगः । चतुर्थादशमान्तेषु सप्तसु सर्वैर्ग्रहैः कूटयोगः सप्तमादिलग्नान्तेषु सप्तसु भावेषु सप्तग्रहैश्छत्रयोगः । दशमादिचतुर्थान्तेषु चापयोगो भवति । तथोक्तं च—

लग्नादिसप्तमान्तस्थैः सर्वखेटैस्तु नौरिति । तुर्यादिदशमान्तस्थैः कूट इत्यभिधीयते ॥
सप्तमादिविलग्नान्तैश्छत्रः सकलखेचरैः । एवं दशादितुर्यान्तैश्चाप इत्युच्यते बुधैः ॥

इति ज्ञानमुक्तावल्याम् ।

अर्द्धचन्द्र इति । नावाद्यैरुक्तैर्योगैरन्यर्क्षसंस्थितैः अर्द्धचन्द्रो योगः प्रोक्तः । नावाद्या योगो केन्द्रेषूक्ताः । तदितरस्थैर्यात्पणफरगतैरापोक्लिमगतैश्च सप्तग्रहैरर्द्धचन्द्रो योगः स्यादिति । एतदुक्तं भवति । द्वितीयादि—अष्टमान्तेषु सप्तसु भावेषु सप्तग्रहैरर्द्धचन्द्रः । तृतीयादिनवमान्तेऽर्द्धचन्द्रः । एवं पञ्चमादिलाभान्ते । षष्ठादि द्वादशान्ते । अष्टमादिद्वितीयान्ते । नवमादितृतीयान्ते । लाभादिपञ्चमान्ते । द्वादशादिषष्ठान्ते । एवं सप्तसु भावेषु सप्त-

ग्रहैरष्टधा अर्द्धचन्द्रयोगः स्यादिति । तथा हि—

परस्परं द्वयादष्टौ
तृतीयान्नवमान्तिकम् ।
पञ्चमैकादशः षष्ठाद्
द्वादशं त्वष्टधा शशी ॥
इति शा. मु. ॥ १७१ ॥

| | | | |
|---|---|---|---|
| २ बु. | १ल.वृ. | | |
| ३ र. | नौयोगः | | |
| ४ शु. | | | |
| ५ श. | ६ मं. | ७ चं. | |

| | | | |
|---|---|---|---|
| | ल. | | |
| | कूटयोगः | | १० मं. |
| ४ बु. | | | श. |
| र. | शु. | चं. | वृ. |

| | | | |
|---|---|---|---|
| | १ ल. श. | वृ. | मं. |
| | छत्रयोगः | | चं. |
| | | | बु. |
| | | ७ शु. | र. |

| | | | |
|---|---|---|---|
| शु. | र.ल. | बु. | मं. |
| श. | चापयोगः | | १० चं. |
| ४ वृ. | | | |
| | | | |

| | | | |
|---|---|---|---|
| मं. | ल. | | च'' |
| बु.म' | अर्द्धचन्द्रस्य त्रयो भेदाः | | वृ''. |
| र.बु'. | | | श''चं'. |
| शु.र' म'' | श.शु'. बु''. | वृ.श. र''. | चं.शु''. वृ'. |

लग्नसे सप्तम भाव तक प्रत्येक भाव में एक एक ग्रह हों तो "नौ" योग, चतुर्थसे दशम पर्यन्त सब ग्रह हों तो "कूट" योग, और सप्तमसे लग्न तक सब ग्रह हों तो "छत्र" योग, और इसी प्रकार दशमसे चतुर्थ पर्यन्त प्रत्येक भावमें एक एक ग्रह हों तो "चाप" योग, होता है। इसके अतिरिक्त स्थानोंमें ग्रह हों तो "अर्ध चन्द्र" योग होता है वह आठ प्रकार का है। द्वितीय भावसे अष्टम भाव तक सब ग्रह हों तो १ भेद, ३ से ९ तक हों तो २ भेद, ५ से ११ तक हों तो ३ भेद, ६ से १२ तक हों तो ४ भेद, ८ से २ तक हों तो ५ वाँ भेद, ९ से ३ तक हों तो ६ भेद, ११ से ५ तक ७ भेद, और बारहसे छः पर्यन्त ८ वाँ भेद है ॥

इदानीं समुद्र-चक्रयोगावाह—

एकान्तरगतैरर्थात्समुद्रः षड्गृहाश्रितैः ।
विलग्नादिस्थितैश्चक्रमित्याकृतिजसङ्ग्रहः ॥ १७२ ॥

एकान्तरगतैरिति । अर्थात = द्वितीयभावात्, एकान्तरगतैः = एकस्मात्परमेकं परित्यज्यैवं यथावसानभावगैः षड्गृहाश्रितैः समुद्रो योगः स्यात् । एतदुक्तं भवति-द्वितीय-चतुर्थ-षष्ठा-ष्टम-दशम-द्वादशेति-भावषट्के सप्त ग्रहा भवेयुस्तदा समुद्रो नाम योगो भवति । चक्रमाह—विलग्नादिस्थितैः = लग्नप्रभृतिषड् ।शिष्वेकान्तरगतेषु सर्वैर्ग्रहैर्व्यवस्थितैः चक्रं नाम योगः । लग्न-तृतीय-पञ्चम-सप्तम-नवम-लाभेति-भावषट्के सप्त ग्रहा भवेयुस्तदा चक्रयोगो भवति । इत्येतावानाकृतिजानां योगानां सङ्ग्रहो जात इति । सारावल्यां समुद्र-चक्रयोर्लक्षणं च तथा—

राश्यन्तरितैर्लग्नात् षड्भवनगतैर्भवेच्चक्रम् । अर्थात्तथैव यातैश्चक्राकारो भवेज्जलधिः॥१७२॥

| | | | |
|---|---|---|---|
| मं. २ | ल. | श. | |
| | समुद्र-योगः | | १०चं |
| र.शु.४ | | | |
| | बु. | | वृ. ८ |

| | | | |
|---|---|---|---|
| | मं.ल. १ | | ११श. |
| र.बु.३ | चक्रयोगः | | |
| | | | वृ. ९ |
| शु. ५ | | चं.७ | |

द्वितीय भावसे बारहों भावोंके बीचमें यदि एक २ स्थान छोड़ कर ( २।४।६।८।१०।१२ ) में सब ग्रह हों तो "समुद्र" योग और लग्नसे ११ पर्यन्त इसी प्रकार एक एक भाव छो. कर ( १।३।५।७।९।११ ) में सब ग्रह हों तो "चक्र" योग होता है। इस प्रकार आचार्यों ने आकृति योगका संग्रह किया है ॥ १७२ ॥

अधुना सङ्ख्यायोगानाह—

सङ्ख्यायोगाः सप्त सप्तर्क्षसंस्थैरेकापायाद्वल्लकीदामपाशाः ।
केदाराख्यः शूलयोगो युगं च गोलश्चान्यान् पूर्वमुक्तान्विहाय ॥१७३॥

सङ्ख्येति । सप्तर्क्षसंस्थैः=येषु तेषु सप्तसु भावेषु व्यवस्थितैः सप्तभिर्ग्रहैरेकापायादेक-मेकं पूर्वस्मात्पूर्वस्माद्विहाय वल्लकी-( वीणा ) प्रभृति-सप्त सङ्ख्यायोगाः स्युः । इदमुक्तं भवति । येषु तेषु सप्तसु भावेषु सप्त ग्रहा भवेयुस्तदा वल्लकी ( वीणा ) योगः । षट्सु भावेषु सर्वैर्ग्रहैर्दामिनी (दाम) योगः । पञ्चसु भावेषु सर्वैर्ग्रहैः पाशः । चतुर्षु केदारः । त्रिषु शूलः । द्वयोः युगम् । एकस्मिन्नेव भावे सप्त ग्रहाः स्युस्तदा गोलो योगो भवतीति । परञ्चैते योगाः पूर्वमुक्तानन्यान्योगान् विहाय सम्भवन्ति । अत्रेदं चिन्त्यम् । पूर्वोक्तानामाकृति-योगानां मध्याद्यदि कस्मादपि संख्यायोगस्य सादृश्यं भवति तदा अमी सङ्ख्यायोगा न स्वीकार्याः । तदानीमाकृतियोगा एवाङ्गीकर्त्तव्या इति ॥ १७३ ॥

संख्या योग सात प्रकार का होता है। किसी भी सात स्थानोंमें सात ग्रह हों तो "वल्लकी" योग होता है। छः स्थानोंमें सातों ग्रह हों तो "दामिनी" योग। पाँच स्थानों में हों तो 'पाश' योग। चार स्थानोंमें हों तो 'केदार' योग। तीन स्थानोंमें हों तो "शूल" योग। दो स्थानोंमें सब ग्रह हों तो "युग" योग होता है। एक स्थानमें सब ग्रह हों तो 'गोल' योग होता है। इस प्रकार संख्या योगोंको कहे हैं। जिस जगह संख्या योगकी प्राप्तिमें पूर्वोक्त योगोंकी भी प्राप्ति हो वहां वे योग ही फल देते हैं, संख्यायोग फल नहीं देते। संख्यायोग वहां ही फल देगा जहां पूर्वोक्त आश्रय योगोंकी प्राप्ति नहीं हो ॥ १७३ ॥

अथ आश्रयदलयोगफलम् ।

ईर्ष्युर्विदेशनिरतोऽध्वरतश्च रज्ज्वाम् ,मानी धनी च मुसले बहुभृत्यसक्तः ।
व्यङ्गः स्थिराढ्यनिपुणो नलजः स्रगुत्थो, भोगान्वितो भुजगतो बहुदुःखभाजः ॥

अथ गदादियोगफलम् ।

यज्वाऽर्थभाक् सततमर्थरुचिर्गदायां, तद्वृत्तिभुक् शकटजः सरुजः कुदारः ।
दूतोऽटनः कलहकृद्विहगे प्रदिष्टः, शृङ्गाटके चिरसुखी कृषिकृद्धलाख्ये ॥१७५॥
वज्रेऽन्त्यपूर्वसुखितः सुभगोऽतिशूरः,.शौचान्वितोऽपि च यवे सुखितो वयोऽन्तः ।
विख्यातकीर्त्यमितसौख्यगुणाश्च पद्मे वाप्यां तनुस्थिरसुखी निधिपोऽन्नदाता ॥
त्यागात्मवान् क्रतुवरैर्यजते च यूपे हिंस्रोऽथ गुप्त्यधिकृतः शरकृच्छराख्ये ।
नीचोऽलसः सुखधनैर्वियुतश्च शक्तौ दण्डे प्रियैर्विरहितः पुरुषोऽन्त्यवृत्तिः १७७

छत्रे चाद्यन्तसौख्यातुलधनबलवान् नौभवस्तोयजीवी
चक्रे राजा यशस्वी जलधिभवनरस्तोयवृत्तिः क्षितीशः ।
अर्धेन्दौ भोगशाली गिरिविपिनचरः क्रूरकर्मा च कूटे
चापे जाता मनुष्या यदि गहनचराश्चौर्यनिष्ठा निकृष्टाः ॥ १७८ ॥

वीणायां सकलक्रियासु निपुणः सङ्गीतनृत्यप्रियो-
दामिन्यामुपकारकृत्पटुमतिः प्रख्यातविद्याधनी ।
पाशे शीलधनार्जनेऽतिचतुरो वाचालकः पुत्रवान्
केदारे कृषिवित्तवानलसधीर्बन्धूपकारी भवेत् ॥ १७९ ॥

शूले कोपरसान्वितो धनरुचिः शूरः क्षतो निर्धनी
भिक्षाशी युगयोगजोऽतिचपलः पाषण्डको मद्यपः ।
गोले निर्द्धनकोऽलसोऽटनपरः स्वल्पायुरज्ञानधी-
र्द्वात्रिंशत् कथिता वराहमिहिराचार्येण योगा इमे ॥ १८० ॥

इदानीं श्लोकषट्केन पूर्वोक्तद्वात्रिंशद् ( विंशत्याकृतित्रयाश्रयद्विदलसप्तसङ्ख्येतिद्वात्रिंशत्– ) योगानां फलानि कथ्यन्ते । श्लोकाश्च स्पष्टार्था एवेत्यलमतिविस्तरेण ॥ १७४–१८० ॥

रज्जु योगोत्पन्न जातक पराई भलाईसे जलनेवाला तथा निरंतर परदेश में रहने वाला और हमेशा मार्ग पर चलने में रुचि रखने वाला होता है ।

जो मुसल योगमें उत्पन्न हो वह मानी, धनी और विशेष नौकर वाला होता है ।

जो मनुष्य नल योगमें उत्पन्न हो वह अङ्गहीन, दृढ निश्चयवाला, धनी और समस्त कार्यमें सूक्ष्म दृष्टिसे विचारनेवाला होता है । ये तीनों आश्रययोगके फल हैं ।

माला योगमें उत्पन्न होनेवाला भोगी होता है । सर्प योगोत्पन्न मनुष्य अनेक प्रकार का दुःख भोगता है ॥ १७४ ॥

गदा योगवाला मनुष्य यज्ञ करने वाला और धन भोगने वाला तथा धनसंग्रहमें उद्यमी होता है ।

शकट योगोद्भव मनुष्यकी जीविका गाड़ी-रथ आदिसे होती है, नित्य रोगी और उसकी स्त्री कुरूपा होती है ।

विहंग योगवाला मनुष्य दूत का काम करता है और झगड़ालु होता है ।

शृङ्गाटक योगवाला मनुष्य बहुत काल तक सुखी रहता है ।

हलयोग वाला मनुष्य खेती का काम और पशुपालन आदि बहुत उत्तम जानता है ॥ १७५ ॥

वज्र योगमें उत्पन्न होनेवाला मनुष्य प्रथम और अन्त्य अवस्थामें सुखी, मध्यमें दुःखी और सबका प्यारा तथा अत्यन्त पराक्रमी होता है ।

यव योग वाला मनुष्य बलवान् और मध्य अवस्थामें सुखी रहता है ।

पद्म योगोद्भव मनुष्य विख्यात कीर्तिवाला और अत्यन्त सुख, गुण तथा विद्यावाला होता है ।

वापी योगवाला मनुष्य बहुत काल पर्यन्त थोड़े सुख वाला और धन बढ़ाने वाला तथा कृपण होता है ॥ १७६ ॥

यूप योगमें उत्पन्न मनुष्य दानी, अहंकारी और यज्ञ करनेवाला होता है । शर ( इषु ) योग में हिंसक, बंधे हुयेको पालनेवाला और शर बनानेवाला होता है ।

शक्ति योगमें नीच कर्म करनेवाला, आलसी, दुःखी और दरिद्र होता है । दण्ड योगमें प्रिय ( पुत्रादि ) से रहित और शूद्रकी वृत्तिवाला ( टहलुआ ) होता है ।

छत्र-योगोद्भव जातक आदि और अन्त्य अवस्थामें सुखी, अतुल धनवाला तथा बली होता है ।

नौ योगोत्पन्न जातक जलकी जीविकावाला होता है । चक्र योगका जातक यशस्वी राजा होता है । जलधि ( समुद्र ) योगवाला मनुष्य जलवृत्तिवाला राजा होता है । अर्धेन्दु योगमें जायमान मनुष्य भोगशाली होता है । कूट योगमें उत्पन्न नर पहाड़ और जंगलका रहनेवाला तथा क्रूर कर्म करनेवाला होता है । चाप योगमें उत्पन्न होनेवाला मनुष्य जंगली, चोरी कर्म करनेवाला और निकृष्ट होता है ॥ १७८ ॥

वीणा योगमें उत्पन्न मनुष्य सकल क्रियामें चतुर, संगीत नृत्यका प्रिय होता है । दामिनी योगमें उत्पन्न मनुष्य उपकारी, पटु बुद्धिवाला, विद्यामें विख्यात और धनी होता है । पाश योगमें उत्पन्न जातक शीलवान्, धनोपार्जनमें चतुर, वाचाल और पुत्रवान् होता है । केदार योगमें उत्पन्न होनेवाला जातक कृषि-कार्य परायण, धनवान्, आलसी बुद्धिवाला और बन्धुजनोंका उपकारी होता है ॥ १७९ ॥

शूल योगमें पैदा हुआ मनुष्य क्रोध-रससे युक्त, धनमें रुचिवाला, लड़ाका, घाववाला और दरिद्र होता है। युग योगमें उत्पन्न होनेवाला मनुष्य अत्यन्त चञ्चल पाखण्डी और शराबी होता है। गोल योगमें उत्पन्न होनेवाला मनुष्य दरिद्र, आलसी, भटकनेवाला, थोड़ी आयुवाला और नादान बुद्धिवाला होता है। ये ३२ योग श्रीवराहमिहिराचार्यजी-ने बृहज्जातकमें कहे हैं। सु० शा० कारः ॥ १८० ॥

भूपालयोगरुचपञ्चकभास्कराद्याः केमद्रुमाधमसमग्रहमालिकाश्च ।
लक्ष्मीहरीशविधिकाहलनामसाद्याः सूर्यादिदेवकृपया परिकीर्तितास्ते ॥१८१

श्लोकेनानेनाध्यायमुपसंहरतीति । स्पष्टार्थः ॥ १८१ ॥

पारिजाते सुधा टीका कपिलेश्वररञ्जिता ।
सप्तमे राजयोगोऽस्मिन्नध्याये पूर्णतां गता ॥ ७ ॥

सभी राजयोग, रुचक आदि पांच योग, भास्कर आदि योग, केमद्रुम, अधम, सम, ग्रह-मालिका योग, लक्ष्मीयोग, हरि-हर विधियोग, काहलयोग और नाभसादि योग इनको सूर्यादि ग्रहोंकी कृपासे इस ७ वें अध्यायमें वर्णन किया ॥ १८१ ॥

इति श्रीवैद्यनाथदैवज्ञविरचिते जातकपारिजाते राजयोगाख्ये सप्तमेऽध्याये
'विमला' हिन्दी टीका समाप्ता ॥ ७ ॥

---

## अथ द्व्यादिग्रहयोगाध्यायः ॥ ८ ॥

अथाधुना द्व्यादिग्रहयोगाध्यायो व्याख्यायते। तत्र प्रथमं द्विग्रहयोगाः—

जातः स्त्रीवशगः क्रियासु निपुणश्चन्द्रान्विते भास्करे,
तेजस्वी बलसत्त्ववाननृतवाक् पापी सभौमे रवौ ।
विद्यारूपबलान्वितोऽस्थिरमतिः सौम्यान्विते पूषणि,
श्रद्धाकर्मपरो नृपप्रियकरो भानौ सजीवे धनी ॥ १ ॥
स्त्रीमूलार्जितबन्धुमाननियुतः प्राज्ञः सशुक्रेऽरुणे
मन्दप्रायमतिः सपत्नवशगो मन्देन युक्ते रवौ ॥
शूरः सत्कुलधर्मवित्तगुणवानिन्दौ धराजान्विते ।
धर्मी शास्त्रपरो विचित्रगुणवान् चन्द्रे सतारासुते ॥ २ ॥
जातः साधुजनाश्रयोऽतिमतिमानार्येण युक्ते विधौ,
पापात्मा क्रयविक्रयेषु कुशलः शुक्रे सशीतद्युतौ ।
कुस्त्रीजः पितृदूषको गतधनस्तारापतौ सार्कजे,
वाग्मी चौषधशिल्पशास्त्रकुशलः सौम्यान्विते भूसुते ॥ ३ ॥
कामी पूज्यगुणान्वितो गणितविद् भौमे सदेवार्चिते,
धातोर्वादरतः प्रपञ्चरसिको धूर्तः सभौमे भृगौ ॥
वादी गानविनोदविज्जडमतिः सौरेण युक्ते कुजे ।
वाग्मी रूपगुणान्वितोऽधिकधनी वाचस्पतौ सेन्दुजे ॥ ४ ॥
शास्त्री गानविनोदहास्यरसिकः शुक्रे सचन्द्रात्मजे
विद्यावित्तविशिष्टधर्मगुणवानर्कात्मजे सेन्दुजे ॥
तेजस्वी नृपतिप्रियोऽतिमतिमान् शूरः सशुक्रे गुरौ ।
शिल्पी मन्त्रिणि सार्कजे पशुपतिर्मल्लः सिते सासिते ॥ ५ ॥

भास्करे=सूर्ये चन्द्रान्विते ( सूर्याचन्द्रमसोर्योगे ) जातः स्त्रीवशगः=स्त्रिया वश्यो भवति, क्रियासु=व्यावहारिककार्येषु निपुणो दक्षो भवति । समौमे रवौ=सूर्यमङ्गलयोर्योगे जातो हि तेजस्वी भवति, बलवान्-सत्त्व-(पराक्रम-)वान् भवति, अनृतवाक्=मिथ्यावादी पापी च भवति। सौम्यान्विते=बुधेन युक्ते पूषणि=सूर्ये जाता विद्यया, रूपेण, बलेन चान्वितो युक्तोऽस्थिरमतिश्चपलबुद्धिश्च भवति । भानौ सजीवे=गुरुसंहिते सूर्ये जातो नरः श्रद्धाकर्मपरः=श्रद्धाकर्मपरायणो नृपस्य=राज्ञः प्रियकरः=आह्लादकश्च भवति । एवं सू. शु., सू. श, चं., मं., चं. बु., चं. बृ., चं. शु. च. श., मं. बु., मं. बृ., मं. शु. मं श., बु. बृ., बु. शु., बु. श., बृ. शु., बृ. श., शु. श., इत्येकविंशतिभेदा द्विग्रहयोगे सम्भवन्ति । तेषां फलानि सरलार्थकानि चेति ॥ १-५ ॥

अब दो दो ग्रहोंके योगोंका फल कहते हैं-जिसके जन्म समयमें चन्द्रमासे युत सूर्य हो वह स्त्रीका अनुगामी हो और क्रियामें निपुण हो । मङ्गलके साथ सूर्य हो तो बलवान्, तेजवान्, झूठ बोलनेवाला और पापी होता है । बुधसे युक्त सूर्य हो तो विद्या-रूप और बलसे युक्त, चञ्चल बुद्धिवाला होता है । बृहस्पतिसे युक्त सूर्य हो तो श्रद्धाकर्ममें निपुण, राजाका प्रिय करनेवाला और धनी होता है ॥ १ ॥

यदि सूर्य शुक्रसे युक्त हो तो स्त्रीके द्वारा धनप्राप्त हो और बान्धवोंसे युक्त हो । यदि सूर्य शनिसे युक्त हो तो प्रायः मन्दबुद्धि और शत्रुके अधीन पुरुषको करता है । यदि चन्द्रमा मङ्गलके साथ हो तो पुरुष शूर, कुलीन, धर्मात्मा, धनी तथा गुणवान् होता है। यदि चन्द्रमा बुधसे युक्त हो तो धर्म करनेवाला, शास्त्रका ज्ञाता तथा विभिन्न गुणोंसे युक्त पुरुष हो ॥ २ ॥

यदि चन्द्रमा गुरुयुक्त हो तो जातक साधुजनावलम्बी और पूर्ण बुद्धिमान् हो । यदि चन्द्रमा शुक्रसे युक्त हो तो वह जातक पापात्मा, क्रय-विक्रय करनेमें कुशल होवे। यदि चन्द्रमा शनिसे युक्त हो तो वह जातक बुरी स्त्रीवाला, पिताका निन्दक तथा धनहीन व्यक्ति होवे । यदि मङ्गल बुधसे युत हो तो वह जातक वक्ता, औषधका जानकार तथा शिल्पकलाका ज्ञाता होवे ॥ ३ ॥

यदि मङ्गल जन्म-समयमें बृहस्पतिसे युक्त हो तो पुरुष कामी, पूजनीय, गुणवान्, गणित शास्त्रका ज्ञाता हो । मङ्गल यदि शुक्रसे युक्त हो तो वह पुरुष धातुओंका व्यवहार वाला, प्रपञ्च सुननेका प्रेमी तथा धूर्त हो । यदि मङ्गल शनिसे युक्त हो तो पुरुष कलह करने वाला, गाने बजानेका रसिक और जडबुद्धि हो । यदि बृहस्पति बुधसे युक्त हो तो पुरुष वक्ता, रूपवान्, गुणवान् और अधिक धनवान् हो ॥ ४ ॥

यदि बुध शुक्रसे युक्त हो तो पुरुष शास्त्र जाननेवाला, गानेका प्रेमी और हँसमुख होवे । यदि बुध शनिसे युक्त हो तो पुरुष विद्वान्, धनी, अधिक धर्मात्मा और गुणवान् होवे । यदि बृहस्पति शुक्र संयुक्त हो तो जातक तेजस्वी, राजप्रिय, अत्यन्त बुद्धिमान् तथा बलवान् हो । यदि बृहस्पति शनिसे युक्त हो तो शिल्पकार तथा शनि और शुक्र एकत्रित हों तो पुरुष अधिक पशुपाला तथा मल्ल ( पहलवान् ) होवे ॥ ५ ॥

अथ त्रिग्रहयोगाः ।

सूर्येन्दुक्षितिनन्दनैररिकुलध्वंसी धनी नीतिमान्
जातश्चन्द्ररवीन्दुजैर्नृपसमो विद्वान् यशस्वी भवेत् ॥
सोमार्कामरमन्त्रिभिर्गुणनिधिर्विद्वान् नृपालप्रियः, ।
शुक्रार्केन्दुभिरन्यदारनिरतः क्रूरोऽरिभीतो धनी ॥ ६ ॥
मन्देन्द्वर्कसमागमे खलमतिर्मायी विदेशप्रियो
भास्वद्भूसुतपोधनैर्गतसुखः पुत्रार्थदारान्वितः ॥

जीवार्कावनिजैरतिप्रियकरो मन्त्री चमूपोऽथवा
भौमार्कासुरवन्दितैर्नयनरुग् भोगी कुलीनोऽर्थवान् ॥ ७ ॥
मन्दार्कावनिजैः स्वबन्धुरहितो मुर्खोऽघनो रोगभाक् ।
इन्द्राचार्यरवीन्दुजैः पटुमतिर्विद्यायशोवित्तवान् ॥
भानुज्ञासुरपूजितैर्मृदुतनुर्विद्यायशस्वी सुखी
सौरादित्यबुधैर्विबन्धुरधनो द्वेषी दुराचारवान् ॥ ८ ॥
जीवादित्यसितैः सदारतनयः प्राज्ञोऽक्षिरुग् वित्तवान्
मन्देन्द्रार्चितभानुभिर्गतभयो राजप्रियः सात्विकः ॥
जातो भानुसितासितैः कुचरितो गर्वाभिमानान्वित-
श्चन्द्रारेन्दुसुतैः सदाऽशनपरो दुष्कर्मकृद् दूषकः ॥ ९ ॥
जीवेन्दुक्षितिजैः सरोषवचनः कामातुरो रूपवा-
निन्दुक्ष्माजसितैर्विशीलतनयः सञ्चारशीलो भवेत् ॥
तारेशार्कजभूसुतैश्चलमतिर्दुष्टात्मको मातृहा
जीवेन्दुज्ञसमागमे बहुधनख्यातोऽवनीशप्रियः ॥ १० ॥
विद्यावानपि नीचकर्मनिरतः सेव्यः सितज्ञेन्दुभि-
स्त्यागी भूपतिपूजितश्च गुणवानिन्दुज्ञतिग्मांशुजैः ॥
प्राज्ञः साधुसुतः कलासु निपुणः शुक्रेन्दुदेवार्चितैः
शास्त्री वृद्धवधूरतो नृपसमो वाचस्पतीन्द्वर्कजैः ॥ ११ ॥
वेदी राजपुरोहितोऽतिसुभगः शुक्रेन्दुचण्डांशुजैः
गान्धर्वश्रुतिकाव्यनाटकपरो जीवज्ञभूनन्दनैः ॥
हीनाङ्गः खलवंशजश्चलमतिः शुक्रारचन्द्रात्मजः
प्रेष्यः सामयलोचनोऽटनपरस्ताराजभौमासितैः ॥ १२ ॥
शुक्रारेन्द्रपुरोहितैर्नरपते रिष्टः सपुत्रः सुखी
जीवारार्कसुतैः कृशोऽसुखतनुर्मानी दुराचारवान् ॥
सौरारासुरपूजितैः कुतनयो नित्यं प्रवासान्वितः
शुक्रज्ञामरमन्त्रिभिर्जितरिपुः कीर्तिप्रतापान्वितः ॥ १३ ॥
देवेज्येन्दुजभानुजैरतिसुखश्रीकः स्वदारप्रियो
मन्दज्ञासुरवन्दितैरनृतवाग् दुष्टोऽन्यजायारतः ॥
जातो जीवसितासितैरमलधीर्विख्यातसौख्यान्वित-
श्चन्द्रे पापयुते सदाल्पसुखवान् भानौ पितुस्तद्वदेत् ॥ १४ ॥

अत्र त्रिग्रहयोगे पञ्चत्रिंशद्भेदा भवन्ति। यथा हि—१. र. चं. मं. । २. र. चं. बु. । ३. र. चं. बृ. । ४. र. चं. शु. । ५. र. चं. श. । ६. र. मं. बु. । ७. र. मं. बृ. । ८. र. मं. शु. । ९. र. मं. श. । १०. र. बु. बृ. । ११. र. बु. शु. । १२. र. बु. श. १३. र. बृ. शु. । १४. र. बृ. श. । १५ र. शु. श. । १६. चं. मं. बु. । १७. चं. मं. बृ. । १८. चं. मं. शु. । १९. चं मं. श. । २०. चं. बु. बृ. । २१. चं. बु. शु. । २२. चं. बु. श. । २३. चं. बृ. शु. । २४. चं. बृ. श. । २५. चं. शु. श. । २६. मं. बु. बृ. । २७. मं. बु. शु. । २८. मं. बु. श. । २९. मं. बृ. शु. । ३०. मं. बृ. श. । ३१. मं. शु. श. । ३२. बु. बृ. शु. । ३३. बु. बृ. श. । ३४. बु. शु. श. । ३५. बृ. शु. श. । इति । एवं फलान्यन्योऽपि । श्लोकाः स्पष्टार्था इति ॥ ६–१४ ॥

